॥ श्रीकेतु अष्टोत्तरशतनामस्तोत्रम् ॥

केतु बीज मन्त्र - ॐ स्राँ स्रीं स्रौं सः केतवे नमः ॥

शृणु नामानि जप्यानि केतो रथ महामते ।
केतुः स्थूलशिराश्चैव शिरोमात्रो ध्वजाकृतिः ॥ १॥

नवग्रहयुतः सिंहिकासुरीगर्भसम्भवः ।
महाभीतिकरश्चित्रवर्णो वै पिंगळाक्षकः ॥ २॥

स फलोधूम्रसंकाषः तीक्ष्णदंष्ट्रो महोरगः ।
रक्तनेत्रश्चित्रकारी तीव्रकोपो महासुरः ॥ ३॥

क्रूरकण्ठः क्रोधनिधिश्छायाग्रहविशेषकः ।
अन्त्यग्रहो महाशीर्षो सूर्यारिः पुष्पवद्ग्रही ॥ ४॥

वरहस्तो गदापाणिश्चित्रवस्त्रधरस्तथा ।
चित्रध्वजपताकश्च घोरश्चित्ररथश्शिखी ॥ ५॥

कुळुत्थभक्षकश्चैव वैडूर्याभरण स्तथा ।
उत्पातजनकः शुक्रमित्रं मन्दसखस्तथा ॥ ६॥

गदाधरः नाकपतिः अन्तर्वेदीश्वरस्तथा ।
जैमिनीगोत्रजश्चित्रगुप्तात्मा दक्षिणामुखः ॥ ७॥

मुकुन्दवरपात्रं च महासुरकुलोद्भवः ।
घनवर्णो लम्बदेहो मृत्युपुत्रस्तथैव च ॥ ८॥

उत्पातरूपधारी चाऽदृश्यः कालाग्निसन्निभः ।
नृपीडो ग्रहकारी च सर्वोपद्रवकारकः ॥ ९॥

चित्रप्रसूतो ह्यनलः सर्वव्याधिविनाशकः ।
अपसव्यप्रचारी च नवमे पापदायकः ॥ १०॥

पञ्चमे शोकदश्चोपरागखेचर एव च ।
अतिपुरुषकर्मा च तुरीये सुखप्रदः ॥ ११॥

तृतीये वैरदः पापग्रहश्च स्फोटककारकः ।

प्राणनाथः पञ्चमे तु श्रमकारक एव च ॥ १२॥

द्वितीयेऽस्फुटवाग्दाता विषाकुलितवक्त्रकः ।
कामरूपी सिंहदन्तः सत्येऽप्यनृतवानपि ॥ १३॥

चतुर्थे मातृनाशश्च नवमे पितृनाशकः ।
अन्त्ये वैरप्रदश्चैव सुतानन्दनबन्धकः ॥ १४॥

सर्पाक्षिजातोऽनंगश्च कर्मराश्युद्भवस्तथा ।
उपान्ते कीर्तिदश्चैव सप्तमे कलहप्रदः ॥ १५॥

अष्टमे व्याधिकर्ता च धने बहुसुखप्रदः ।
जनने रोगदश्चोर्ध्वमूर्धजो ग्रहनायकः ॥ १६॥

पापदृष्टिः खेचरश्च शाम्भवोऽशेषपूजितः ।
शाश्वतश्च नटश्चैव शुभाऽशुभफलप्रदः ॥ १७॥

धूम्रश्चैव सुधापायी ह्यजितो भक्तवत्सलः ।
सिंहासनः केतुमूर्ती रवीन्दुद्युतिनाशकः ॥ १८॥

अमरः पीडकोऽमर्त्यो विष्णुदृष्टोऽसुरेश्वरः ।
भक्तरक्षोऽथ वैचित्र्यकपटस्यन्दनस्तथा ॥ १९॥

विचित्रफलदायी च भक्ताभीष्टफलप्रदः ।
एतत्केतुग्रहस्योक्तं नाम्नामष्टोत्तरं शतम् ॥ २०॥

यो भक्त्येदं जपेत्केतुर्नाम्नामष्टोत्तरं शतम् ।
स तु केतोः प्रसादेन सर्वाभीष्टं समाप्नुयात् ॥ २१॥

॥ इति केतु अष्टोत्तरशतनामस्तोत्रम् सम्पूर्णम् ॥